॥ श्रीसुब्रह्मण्य पूजाकल्पः ॥
आदौ विघ्नेश्वर पूजां कृत्वा ।
प्रार्थना ॥

श्री देवसेनाधिपते वल्लीहृत् कञ्जमन्दिरा ।
यावत् पूजां करिष्येऽहं प्रसन्नोभव मे प्रभो ॥

एवं सम्प्रार्थ्य - आसनं परिकल्प्य ॥

आचम्य ॥ ॐ अच्युताय नमः । ॐ अनन्ताय नमः ।
ॐ गोविन्दाय नमः ॥

विघ्नेश्वर ध्यानम् ॥

प्राणायाम्य ॥

ममोपात्त समस्त/हरिरों तत् सत्यादि ... शुभे शोभने
मुहूर्ते आदि शुभतिथौ पर्यंते (अमुक गोत्रोत्भवस्य/
अमुक नक्षत्रे अमुक राशौ जातस्य अमुक नाम शर्मणः नाम्न्या
सहधर्मपत्नी पुत्र पौत्रस्य ), ( अस्य यजमानस्य )
मम सकुटुम्बस्य क्षेम स्थैर्य वीर्य विजयायुरारोग्य
ऐश्वर्याणां अभिवृद्ध्यर्थं ज्ञानवैराग्यसिद्ध्यर्थं,
सत्सन्तान समृद्ध्यर्थं सर्वाभीष्ट सिद्ध्यर्थं
वल्लीदेवसेनासमेत श्री सुब्रह्मण्य प्रसादेन सकल चिन्तित
मनोरथावाप्त्यर्थं यथा शक्त्या यथा मिलितोपचार द्रव्यैः
पुराणोक्त मन्त्रैश्च ध्यानावाहनादि षोडशोपचारैः
वल्लीदेवसेनासमेत श्री सुब्रह्मण्यपूजां करिष्ये । तदङ्गं
कलश-शङ्ख-आत्म-पीठ पूजां च करिष्ये ॥ (एवं
कलशादि पूजां कृत्वा)

अपवित्रो पवित्रो वा सर्व अवस्थाङ्गतोपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सः बाह्याभ्यंतरः शुचिः ॥

एवं पूजाद्रव्याणि आत्मानंच प्रोक्ष्याः ॥

अथ ध्यानं ॥

सुब्रह्मण्यमजं शान्तं कुमारं करुणालयं ।

किरीटहारकेयूर मणिकुण्डल मण्डितम् ॥ १॥

षण्मुखं युगषड्बाहुं शूलाद्यायुधधारिणं ।
स्मितवक्त्रं प्रसन्नाभं स्तूयमानं सदा बुधैः ॥ २॥

वल्ली देवी प्राणनाथं वाञ्चितार्थ प्रदायकं ।
सिंहासने सुखासीनं सूर्यकोटि समप्रभम् ॥ ३॥

एवं ध्यायेत्सदा भक्त्यास्वान्तः करणनिर्मलः ।
अस्मिन् ( बिम्बे वा,चित्रपठे वा,कुम्भे/कलशे वा,मृत्तिक बिम्बे ) साङ्गं सायुधं सपरिवारं सवाहनं सर्वशक्तियुतं वल्लीदेवसेनासमेत श्री सुब्रह्मण्यं ध्यायामि ॥

॥ आवाहनम् ॥

आवाहयामि देवत्वां आश्रितार्थ प्रदायिनं ।
आम्नाय वेद्यविभवं आदिमद्ध्यान्त वर्जितं ॥

अस्मिन् ( बिम्बे वा,चित्रपठे वा,कुम्भे /कलशे वा,मृत्तिक बिम्बे ) साङ्गं सायुधं सपरिवारं सवाहनं सर्वशक्तियुतं वल्लीदेवसेनासमेत श्री सुब्रह्मण्यमावाहयामि ॥

प्राणप्रतिष्ठा कृत्वा ॥

॥ आसनं ॥

रत्नसिंहासनं चारुरत्नसानुधनु:सुत ।
ददामि देवसेनेश दयाकर गृहाणमे ॥

वल्लीदेवसेनासमेत श्री सुब्रह्मण्य स्वामिने नमः
रत्नसिंहासनं समर्पयामि ॥

॥ पाद्यं ॥

पाद्यं गृहाण वल्लीश पार्वती प्रियनन्दन ।
पापं पारय मे सर्वं पुत्रपौत्रान् प्रवर्द्धय ॥

वल्लीदेवसेनासमेत श्री सुब्रह्मण्य स्वामिने नमः पाद्यं समर्पयामि ॥

॥ अर्घ्यं ॥

अर्घ्यं गृहाण गांगेय देवराजसमर्चित ।
सफलान् कुरु कामान् मे षाण्मातुर नमो नमः ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः अर्घ्यं समर्पयामि ॥

॥ आचमनीयं ॥

गृहाणाचमनं देव गुणास्वामिन् गुणालय ।
गुरोरवि गुरो देव गुरुमे कुशलं विभो ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः आचमनीयं समर्पयामि ॥

॥ मधुपर्कं ॥

मधुपर्कं गृहाणेमां मधुसूदन वन्दित ।
महादेवसुतानन्त महापातक नाशनं ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः मधुपर्कं समर्पयामि ॥

॥ पञ्चामृत स्नान ॥

पञ्चामृतेन परम पञ्चपातक नाशन ।
स्नानं कुरु सदाराद्ध्य सुरसेनापतेव्यय ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः पञ्चामृत स्नानं समर्पयामि ॥

॥ स्नानं ॥

देवसिन्धु समुद्भूत गङ्गाधर तनुभव ।

स्नानं स्वीकुरु सर्वेश गङ्गादि सलिलैः शिवैः ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः स्नानं समर्पयामि ॥ स्नानानन्तरं आचमनीयं च समर्पयामि ॥

॥ वस्त्रं ॥

वस्त्रयुग्मं च वल्लीश वारिताखिल पातक ।
सुवर्णतन्तुभिः स्यूतं गृह्यतां गुह षण्मुख ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः वस्त्रं समर्पयामि ॥

॥ उपवीतं ॥

रजतं ब्रह्मसूत्रं च काञ्चनंचोत्तरीयकं ।
ददामि देवसेनेश गृहाण गुणसागर ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः उपवीतं समर्पयामि ॥

॥ विभूति ॥

अग्निहोत्रसमुत्भूतं विरजानलसंभवं ।
गृहाण भसितं देव भूतबाध विनाशन ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः विभूतिं समर्पयामि ॥

॥ गन्धं ॥

कस्तूरी कुङ्कुमोपेतं घनसार समन्वितं ।
गृहाण रुचिरं गन्ध मन्धकारितनूभव ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः गन्धम् धारयामि ॥

॥ अक्षता ॥

अक्षतान् धवलान् रम्यान् हरिद्राचूर्णमिश्रितान् ।
कुमार करुणासिन्धो गृहाण गुणभूषण ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः अक्षतान् समर्पयामि ॥

॥ नानाविध पुष्पाणि ॥

पारिजातानिनीपञ्च पारिजातानि मालतीम् ।
पुन्नागं बिल्वपत्रश्च गृहान क्रौञ्चदारण ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः नानाविध परिमळ पुष्पाणि समर्पयामि ॥

अथ अङ्गपूजा ॥

पार्वती नन्दनाय नमः पादौ पूजयामि ।
गुहाय नमः गुल्फौ पूजयामि ।
जगन्नाथाय नमः जानुनी पूजयामि ।
उरुबलाय नमः ऊरु पूजयामि ।
कृत्तिकासुताय नमः कटिं पूजयामि ।
गुहाय नमः गुह्यं पूजयामि ।
कुमाराय नमः कुक्षिं पूजयामि ।
नारायणीसुताय नमः नाभिं पूजयामि ।
विशाखाय नमः वक्षः पूजयामि ।
कृत्तिकासूनधायाय नमः स्तनौ पूजयामि ।
बहुलासुताय नमः बाहून् पूजयामि ।
हरसूनवे नमः हस्तान् पूजयामि ।
कार्तिकेयाय नमः कण्ठं पूजयामि ।
षण्मुखाय नमः मुखानि पूजयामि ।
सुनासाय नमः नासिकाः पूजयामि ।
देवनेत्रे नमः नेत्राणि पूजयामि ।
हिरण्यकुण्डलाय नमः कर्णान् पूजयामि ।
सर्वफलप्रदाय नमः फालं पूजयामि ।
करुणाकराय नमः कपोलौ पूजयामि ।
शरवणभवाय नमः शिरांसि पूजयामि ।
कुक्कुटध्वजाय नमः कचान् पूजयामि ।
सर्वमङ्गलप्रदाय नमः सर्वाण्यङ्गानि पूजयामि ॥

अथ अष्टोत्तरशतनामवल्या वा  सहस्रनामावल्या वा
पुष्पाक्षतार्चनं कृत्वा ॥

॥ धूपः ॥

दशाङ्गं गुग्गुलूपेतं सुगन्धंच मनोहरं ।
धूपं गृहाण देवेश धूतपाप नमोऽस्तुते ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः
धूपमाघ्रापयामि ॥

॥ दीपः ॥

साज्यवर्ति त्रयोपेतं दीपं पश्य दयानिधे ।
देवसेनापते स्कन्द वल्लीनाथ वरप्रद ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः दीपं
दर्शयामि  । धूपदीपानन्तरं आचमनीयं समर्पयामि ॥

॥ नैवेद्यं ॥

ॐ भूर्भुवःसुवः: तत्सवितुर्वरेण्यं + ब्रह्मणे स्वाहा ।
शाल्यन्नं पायसं क्षीरं लड्ढुकान् मोदकानपि ।
गृहाण कृपया देव फलानि सुबहुनिच ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः
महानैवेद्यं निवेदयामि ॥ मध्ये मध्ये अमृत पानीयं
समर्पयामि । अमृतोपिधान्यमसि । नैवेद्यानन्तरं आचमनीयं
समर्पयामि ॥

॥ महा फलं ॥

इदं फलं मयादेव स्थापितं पुरतस्थव ।
तेन मे सफलावाप्तिर्भवेत् जन्मनिजन्मनि ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः महाफलं
समर्पयामि ॥

॥ ताम्बूलं ॥

पूगीफलानिरम्याणि नागवल्लीदलानिच ।
चूर्णंच चन्द्रसंकाशं गृहाण शिखिवाहन ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः ताम्बूलं समर्पयामि ॥

॥ कर्पूर नीराजन दीपः ॥

नीराजनमिदं रम्यं नीरजाजन संस्तुत ।
गृहाण करुणा सिन्धो कामितार्थ प्रदायक ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः कर्पूर नीराजन दीपं प्रदर्शयामि ॥ नीराजनानन्तरं आचमनीयं समर्पयामि ॥

॥ पुष्पाञ्जलिः ॥

पुष्पाञ्जलिं गृहाणेश पुरुषोत्तम पूजित ।
मयूरवहदेवेशा मनीषितफलप्रद ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः पुष्पाञ्जलिं समर्पयामि ॥

॥ मन्त्रपुष्पं ॥

योऽपां पुष्पं वेद ... भवति ।
वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः वेदोक्त मन्त्रपुष्पं समर्पयामि ॥

॥ प्रदक्षिणं ॥

प्रदक्षिणं करोमि त्वां प्रकृष्ट फलदायिनं ।
पुरुषोत्तम सम्पूज्य पुत्रपौत्रान् प्रवर्द्ध्य ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः प्रदक्षिणं

समर्पयामि ॥

॥ नमस्कारः ॥

नमो गौरीतनूजाय गाङ्गेयाय नमो नमः ।
नमो देववरार्च्याय वल्लीशाय नमो नमः ॥

अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात्कारुण्यभावेन रक्ष रक्ष गुहेश्वर ॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः नमस्कारान् समर्पयामि ॥

विद्यां देहि यशो देहि पुत्रान् देहि सथायुषः ।
त्वयि भक्तिं परां देहि परत्रच परांगतिं ॥

इति प्रार्थनामि ॥

॥ अर्घ्यप्रधानः ॥

अद्य पूर्वोक्त विशेषण विशिष्टायां अस्यां शुभतिथौ
वल्लीदेवसेना समेत श्री सुब्रह्मण्य प्रसादसिद्ध्यर्थं,
पूजान्ते क्षीरार्घ्यप्रदानं उपायनदानं च करिष्ये इति
सङ्कल्प्य ।
सुब्रह्मण्य महाभाग कार्तिकेय सुरेश्वर ।
इदमर्घ्यं प्रदास्यामि सुप्रीतो भव सर्वदा ॥ १॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः
इदमर्घ्यमिदमर्घ्यमिदमर्घ्यं ।
वल्लीश पार्वतीपुत्र व्रतसम्पूर्तिहेतवे ।
इदमर्घ्यं प्रदास्यामि प्रसीद शिखिवाहन ॥ २॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः
इदमर्घ्यमिदमर्घ्यमिदमर्घ्यं ।

रोहिणीश महाभाग सोमसोम विभूषण ।
इदमर्घ्यं प्रदास्यामि सुप्रीतो भवसर्वदा ॥ ३॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः
इदमर्घ्यमिदमर्घ्यमिदमर्घ्यं ।

नीलकण्ठ महाभाग कार्तिकेयस्य वाहन
इदमर्घ्यं प्रदास्यामि प्रसीद शिखिवाहन ॥ ४॥

वल्लीदेवसेना समेत श्री सुब्रह्मण्य स्वामिने नमः
इदमर्घ्यमिदमर्घ्यमिदमर्घ्यं ।

अन्येन मया कृतेन यथाज्ञेन यथाशक्त्या यथामिलितोपचार द्रव्यैः पूजन, अर्घ्यप्रदानेन च भगवान् सर्वात्मकः वल्लीदेवसेनासमेत श्री सुब्रह्मण्यः सुप्रीतः सुप्रसन्नो वरदो भवतु ॥

॥ उपायनदान श्लोकः ॥

उपायनं च विप्राय ददामि फलसंयुतं ।
अनेन प्रीयतां देवः सदाशरवनोत्भव ॥

॥ क्षमा प्रार्थना ॥

यदक्षर पदभ्रष्टं मात्रा हीनन्तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव शिवसूनु नमोऽस्तुते ॥

विसर्ग बिन्दु मात्राणि पद पादाक्षराणि च ।
न्यूनानिचातिरिक्तानि क्षमस्व पुरुषोत्तम ॥

यस्य स्मृत्या च नामोक्त्या तपः कार्याक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।
यत्पूजितं मयादेव परिपूर्णं तदस्तु मे ॥

अपराध सहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयं इति मां मत्वा क्षमस्व पुरुषोत्तम ॥

॥ समर्पणं ॥

कायेन वाचा मनसेन्द्रियेर्वा, बुद्ध्यात्मना वा प्रक्रितेः स्वभावात् ।
करोमि यद् यद् सकलं परस्मै नारायणायेति समर्पयामि ॥

॥ ॐ तत् सत् ब्रह्मार्पणमस्तु ॥

॥ इति श्री सुब्रह्मण्य पूजाकल्पः ॥